कुरुथ। यच्चात्मकार्यं राजोचितं वाच्यं वाच्यमेव। एवं श्रीमहाराजेन सहर्षमुदिते सद्वस्त्रादिभिः सत्कृताः सर्वेऽपि। एवं तिष्ठतां तेषां आषाढचतुर्मासीपर्व समागतम्।

तदानीं रूपचन्द्रादिभिः सदलङ्कारभूषितैर्देवसदनं गन्तुकामै रयणुंसाहः पृष्टः सन् इति व्याहृतवान्—'भोः! श्रूयतामस्माकं तु वत्सापत्यैः सार्द्धं विवादो जातोऽस्ति। नवीनमन्दिरं कारयित्वैव जिनमन्दिरे गमनं युक्तमन्यथा न हि' इत्याकर्ण्य रूपचन्द्र-कमोजीकाभ्यामुक्तम्—'कृतं प्रसाधनम्, नोत्तारयामोऽधुना।' एतेनैव प्रतिकर्मणा राज्यद्वारतो मन्दिरभूमिं गृह्णीमस्तदा वरम्, इत्यामृश्य प्रधानमेकं शिरोभूषणं रजतैकसहस्रं च लात्वा राज्यद्वारे गत्वा राज्ञः प्राभृतीकृतम्। तदा राज्ञा श्रीलूणकरणेनाऽऽज्ञप्तम्—'भोः! कथ्यताम्' इत्युक्ते रयणुंसाहेन विज्ञप्तम्—'महाराज! वयं नवीनं श्रीजैनमन्दिरं कारयिष्यामस्ततो मन्दिरोचिता भूमिः प्रदीयताम्।' तदा राज्ञाऽभाणि—'नगरे सती भूमिर्भवदीया, यथेच्छं गृह्यतामस्मच्छासनमस्ति।' ततो रयणुंसाहेन मनोऽभिमता भूरुपात्ता। संवत् १५७८ विजयदशम्या दिवसे श्रीवीरवर्द्धमानस्वामिनो मन्दिरस्य पादो धृतः। ततः परं शैघ्र्याद् रूपचन्द्र-कमोजी नगोजीका मन्दिरकार्यं कारयन्ति। रजताना पञ्चविंशति सहस्राणि रयणुंसाहेन पृथगेव रक्षितानि सन्ति। अस्मिन्नवसरे सोहिलात्मजस्य रूपचन्द्रभ्रातुः खेतसीकस्योद्वाहो नागोरपुरे मण्डितोऽस्ति। तदुपरि रयणुंजी-रूपचन्द्रजी-कमोजीका अहिपुरं गताः। भाण्डोजी-नगोजीकौ बीका-नगरे स्थितौ। रयणुंजीकेन नागोरपुरं गच्छता रूपचन्द्रजीकस्य कथनेन मन्दिरकार्यस्य अर्पणा नागोजीकस्य कृता। रजताना पञ्चदशसहस्राणि दत्तानि। कथितं च मन्दिरकार्यं शीघ्रतया कार्यम्।

अथ नगोजीकः श्रीमन्दिरकृत्यं कारयति। तस्मिन् समये कोडमदेसरनिवासी सोनो नाम वैद्यो निःस्वोऽस्ति। तेनाऽऽगत्य नगोजीकं प्रति लपितम्—'एतत् कार्यं मम समर्प्यताम्' इत्युक्ते स्थानीयोऽयमिति मत्वा मन्दिरकृत्यं तद्धस्तेन कारितम्। तावता रजताना पञ्चदश सहस्राणि व्ययीभूतानि। तदा सोनाकेनोक्तम्—'पुना रजतानि प्रदीयताम्।' तदा नगोजीकेनाऽभाणि—'सांप्रतं कार्यशैथिल्यं विधीयताम्, समयान्तरेण पुनः करिष्यते।' अस्मिन्नवसरे यद् वृत्तं तल्लिपीक्रियते।

नगरलोकेषु प्रशस्यः श्रावकशिरोरत्नं धनी सुकृती गांधीगोत्रीयः सदारङ्गजी सींचोजीकश्च वर्त्तेते। तयोर्मध्ये सींचोजीको महान् धर्ममर्मज्ञः शास्त्रार्थज्ञोऽस्ति। सींचोजीपार्श्वे रूपचन्द्रस्य महती स्थितिः। ऊभौ धर्मगोष्ठीं कुरुतः परं सिद्धान्तपुस्तकानामलाभात् साधु-श्रावकधर्मभेदं न जानीतः। सिद्धान्तश्रवणोत्कं मनो विशेषादेतयोः सदैवास्ते।

इतश्च कैश्चित् पौषधशालिकैः सिद्धान्तपुस्तकानि भूमिगृहमध्यस्थानि ज्ञात्वा जालोरनिगमनिवासिलुंकाह्व-लेखकमाहूय रहः संस्थाप्य पुस्तकलिखनं कारितम्। अथ पुस्तकलिखनं कुर्वता लुंकासाहेन साधोराचारं दृष्ट्वाऽर्थविचारं मनसि कृत्वा सहर्षभरं विमृष्टम्, धन्यं श्रीजैनशासनम्, धन्याः साधवो ये ईदृग्गुणैर्विराजमाना भवन्ति। तच्चरणरजसैव पापानि विलयं यान्ति, इत्यामृश्यान्यपत्राणि कृत्वा यतिभ्यः प्रच्छन्नं स्वस्मै सिद्धान्तान्लिखति लेखकः सः। एवं कुर्वता सर्वग्रन्था लिखित्वा गुरुभ्यो विसृष्टाः। स्वस्यापि पार्श्वे रक्षिताश्च। अथ गुरुतो गृहगमनाऽऽज्ञा प्रार्थिता। तस्मिन्नवसरे रूपचन्द्रजीकेन प्रवृत्तिरियं प्राप्ता। लुंकासाहं प्रत्युक्तम्—'दर्शयतां नः सिद्धान्तान्, लिखित्वाऽपि च दीयताम्।' तदा लुंकासाहेनावादि—'अत्र तु लिखने यतयो विगृह्णन्ति, गृहे

गत्वाऽसिद्धान्तांल्लिखित्वा वः प्रेषयामि' इत्युक्ते रूपचन्द्रजीकेन व्याहृतम्–'वचो दीयताम्।' तदा लुंकासाहोऽवदत्–'यूयमपि वचो दत्त।' तदा रूपचन्द्रेणाभाणि–'वयं कीदृग् वचो दद्मः?' ततो लुंकासाहोऽवदत्–'अहं जाने भवद्वेश्मनि ईदृशी संपदस्ति। एतद्धो वयः सुन्दरं विद्यते। पुनर्भवतां धर्मेण परिणामातिरेकं वीक्ष्य जानामि, भवन्तः सत्क्रियोद्धारं करिष्यन्ति, तन्ममापि नाम चेद् रक्ष्यं भवेत्, तदाऽहं सिद्धान्तांल्लिखित्वा प्रदद्याम्।' इत्युदीरिते रूपचन्द्रजीकोऽरोचत्–'मम वचोऽस्ति अस्माभिश्चेत् क्रियोद्धारः कृतस्तदा वयं नागोरगच्छीयाः स्म एव। भवतामस्माकं चेत्युभयेषां नाम रक्षिष्यामः।'

अथ लुंकेसाहेन जालोरपुरात् सर्वागमकदम्बकं रूपचन्द्रेभ्यः प्रहितम्। अन्यदेशेष्वपि योग्यगृहिणो वीक्ष्य दत्तम्। अथ रूपचन्द्रजीकः सींचोजीपार्श्वे सिद्धान्तान् शृणोत्यधीते च। एकदा सींचोजीकेन रूपचन्द्रजीकं प्रति कथितम्–'भवन्तश्चेत् क्रियोद्धारं कुर्युस्तदा जगति महन्नाम स्यात्। पुनः धर्मस्य महिमा महान् भवति। भवदीयां गिरमाकर्ण्य बहवो जीवाः प्रतिबुध्यन्ते, चतुर्विधश्रीसंघस्थापना च जायते।' तदा रूपचन्द्रजीकेनोदितम्–'स्त्रियं प्रतिबोध्य पित्रोराज्ञां च लात्वा दीक्षां कक्षीकरिष्येऽहम्। पुनर्यावद् दीक्षाज्ञानं प्राप्नुयां तावच्छुद्धश्रावकधर्मं पालयिष्यामि' इत्युदीर्य गृहं गताः सर्वे।

अथ तत्क्षणकृतसरसभोजन-नागवल्लीदलचर्व्वण-सरसाऽऽमोदलेपन-गुलाबजलेन स्नान-कश्मीरजन्मादितिलककरणादीनि सर्वाणि त्यक्तानि रूपचन्द्रजीकेन विरक्तात्मना। एवं सति हीरागरजीकेनेयं वार्त्ता श्रुता, विमृष्टं च धन्यः सुराणगोत्रीयः। श्रीरूपचन्द्रोऽस्यामवस्थाया परामीदृशीं ऋद्धिं त्यक्त्वा दीक्षामङ्गीकरिष्यति। ततो वयमपि लास्यामो व्रतम्। एवं ज्ञात्वा रूपचन्द्रान्तिके समेतो हीरागरः श्रीश्रीमालान्वयः। अथ रूपचन्द्रजीकस्य द्वितीये सहाये मिलिते दीक्षाभिलाषो महानेव जातः।

अथैकदा रूपचन्द्रजीको गृहे पित्रादिपरिवारमध्ये स्थितः सरससिद्धान्तव्याख्यानं कुर्वन्नाह श्लोकम्–

> यो दीक्षाऽनुमतिं दत्ते संसारे नास्ति तत्समः।
> निषेधयति दीक्षां यो धीहीनोऽपि न तत्समः॥ ४

एवमुक्ते रयणुजीकः प्राह–'दीक्षानिवारणं न कार्यमिति मे नियमः। भ्राता वा पुत्रो वा नारी वा यः कश्चिद् भाग्यवान् गृहारम्भसमारम्भादिकं त्यक्त्वा प्रव्रज्यामादत्ते स सुकृती।' तस्मिन्नवसरे सोहिलसाहे स्वर्गते रूपचन्द्रेण विमृष्टमधुना गृहे स्थातव्यं न हि। पितृस्वसुः समीपे गत्वा कृताञ्जलिना दीक्षानुमतिरर्थिता। अथ पितृष्वसाऽऽह–'हे रूपचन्द्र! भवान् भोगिभ्रमरः, शृणु मद्वचः। तव सुन्दरमोदकपक्वान्नसहितोदनं रोचते, साधुत्वे तु शीतविरसाद्यन्नप्राप्तिः। अत्र अतलसादिभव्यनव्यनेपथ्यानि, तत्र तु मलिनांशुकधारणं शिरोलोचकरणं भविष्यति। अत्र ताम्बूलं पुष्पस्रक्, तत्र दन्तधावनमपि न, देहस्य शुश्रूषाऽपि न कार्या। अत्र रम्यशयनीये शयनम्, तत्र भूमावेव शयनोपवेशनादि। अत्र भव्यजलैः स्नानम्, तत्र गात्रे मलसंचयः। अत्र गोदुग्धादिपेयमपेयम्, तत्र नित्यमुष्णजलं पास्यसि। अत्र त्वं राजेवाऽऽज्ञां करोषि, तत्र तु गृहे गृहे भिक्षार्थमटनम्, कण्टकादिसहनम्' इत्यादीनि पितृष्वसा बहूनि वचांसि व्याहृतानि। तदा रूपचन्द्रेणोक्तम्–'पितृष्वसः! साधुभावात् कातरो बिभेति, न शूरपुरुषः।' एवं पितृष्वसारं प्रतिबोध्याऽऽज्ञा गृहीता।

अथैकदा रूपचन्द्रो नवीनमन्दिरोपरि रमणीयं केलिगृहं कारयित्वा स्त्रिया युतः पर्यङ्कोपरि निषण्णः सन् धर्मवार्तां करोति; अनेन जीवेन गढ-हर्म्यादिसुन्दरस्त्रियो राज्यलीलाश्चानेकशोऽधिगताः, परन्तु संयमं विना जीवस्य न किञ्चित् कार्यं सरति। इत्थं वार्चयतोः स्त्रिया हास्येन भणितम्–'संयमं गृह्णतः को वारयति? कस्यापि चित्ते दीक्षाभिलाषोऽस्ति चेत् तदा गृह्यतां संयमश्रीः' इति कथिते सत्येव रूपचन्द्रः प्राह–'अथ गार्हस्थ्ये वसनस्य मे नियमोऽस्ति' इत्याकर्ण्य स्त्री विलक्षा जाता सती बभाण–'हे कान्त! मया तु हास्यं वचो व्याहृतम्।' तदा रूपचन्द्रेणाऽभाणि–'भामिनि! हस्तिनां ये रदा निर्गतास्ते पश्चान्न प्रविशन्ति, तथैव ममापि नियमो नापवर्त्तते। पुनरस्मिन् संसारे देवलोकादिष्वनन्तशः स्त्री-भर्तृसंबन्धः प्राप्तः, तस्मात् प्रसद्य, हे सुभगे! दीक्षानुमतिं देहि।' इत्युक्ते तयाऽऽज्ञा प्रदत्ता। अथ रूपचन्द्रः प्रसन्नः सन् प्रातःकालीनं प्रतिक्रमणं कृत्वा समुदिते दिनकरे माता-पित्रोरुवाच–'भो पितरौ! अन्यैस्तु सर्वैराज्ञा दत्ताऽस्त्येव, परं भवदाज्ञा विशेषतः श्रेयसी गृहीतुं युज्यते। अतः सा प्रदीयताम्।' तदा पितृभ्यामत्याग्रहं ज्ञात्वा आज्ञा प्रदत्ता।

अथ रूपचन्द्रः प्रहृष्टः फलितमनोरथः सन् दीक्षां लातुमुद्यतो जातः। तस्मिन्नवसरे पञ्चायणनामा स्वसहोदरः सहसमल्लाङ्कपुत्रो द्वितीयां स्त्रियं परिणेतुमना विवाहमकरोत्। तोरणानि बद्धानि, सधवस्त्रीभिर्मङ्गलगीतानि गातुमारब्धानि सन्ति। तत्समये पञ्चायणजीकेन रूपचन्द्रस्य दीक्षावार्ता श्रुता विचारितं च–'असारोऽयं संसारः, धन्यो रूपचन्द्रः यो विद्यमानां संपदं रम्यां रमणीं च त्यजति। धिगस्तु मां योऽहं द्वितीयां स्त्रियं परिणेतुमना अस्मि' इत्यामृश्य विवाहस्य भङ्गं दीक्षायाः कृत्वा रूपचन्द्रान्तिके गतः। पञ्चायणजीकः प्राह–'भो महाभाग रूपचन्द्र! प्रव्रज्यासमादानप्रसितयोर्भवतोरहं तृतीयो भवामि, अहमपि दीक्षामादास्ये' इति पञ्चायणजीकस्य वचो निशम्य हीरागर-रूपचन्द्राभ्यां विमृष्टम्–अहो! शुभः सार्थो मिलितः। तनु-मनो-नयनानि विकसितानि। अस्मिन्नवसरे सिद्धान्तवचसा वर्षसहस्रद्वयस्थितिको भस्मग्रहोऽपि समुत्तीर्णः। उदितो जिनधर्मसहस्रकरः। श्लोकः–

भस्मग्रहे समुत्तीर्णः त्रयाणां जगतामिव।
जिनधर्मारुणेनैषां प्रध्वस्तं ह्यान्तरं तमः॥ ९

अथैतस्मिन् समायोगे सं०१५८० मिते वर्षे ज्येष्ठशुक्लप्रतिपदो दिनं दीक्षामुहूर्त्तं शुभमागतम्। हीरागरस्य प्रव्रज्यामहोत्सवः सहसमल्ल-श्रीकरण-सहसवीर-शिवदत्तैर्मण्डितः। रूपचन्द्र-पञ्चायणकयोर्महामहः साह रयणुंजीकेन प्रारब्धः। अर्थिभ्यो दीयमानेषु बह्वी वेला लग्ना, तावता भानुरस्तं गतः। अथ प्रातरुत्थाय स्वजनसंबन्धिवर्गे मिलिते प्रथमरसशोभासमुदये जाग्रति गीयमानेषु सजलजलधरगम्भीरगर्जेषु नान्दीतूर्येषु वाद्यमानेषु दीक्षां समादातुं निर्गच्छन्ति त्रयोऽपि शूरतरपुरुषाः। तस्मिन्नवसरे नगरे वार्ता विस्तृता। बहवो राजकीयाः पुरुषाः पञ्चजनाः साधुकाराश्चागताः। साहिशिरोमणिनाऽपि स्वीयकृष्णमन्त्रीश्वर उत्सवकरणाय प्रेषितः। अथ त्रयोऽपि ते तिस्रः शिविका आरुह्य जयजयशब्देषु प्रवर्त्तमानेषु बहुषु क्षत्रियमहाजनद्विजातिप्रमुखनागरिकेषु पादयोर्नमत्सु, मस्तके मुकुटं बद्ध्वा गलेषु हारेषु ध्रियमाणेषु श्रीसिद्धार्थमहाराजपुत्रवदतिशयेन दीयमानेषु नानादानेषु सायरसाहस्याङ्गोद्याने समेताः। प्रथमतः शिविका हीरागरस्य, ततो रूपचन्द्रस्य, तत्पृष्ठतः पञ्चायणकस्य चलिता। क्रमेण सायरसाहस्याङ्गोद्याने त्रयोऽपि शिविकाभ्यः समुत्तीर्य प्रथमालापं मुखादुच्चार्य, आभरणादिकं सर्वं समुत्तार्य च पूर्वदिगभिमुखं त्रयोऽप्युपविष्टाः। ततः स्वहस्तेन लोचं कृत्वा अर्हत्-सिद्ध-साधून् नमस्कृत्य च पञ्चमहाव्रतरूपं सामायिकचारित्र-

मादृतं त्रिभिः। बहुषु लोकेषु 'धन्या एते' इति शब्दं कुर्वाणेषु श्रीचन्द्रप्रभस्वामिनो मन्दिरे समेत्य स्थिताः। अथ सिकदारश्रेष्ठिसाधुकारैः सर्वैरागत्य श्रीहीरागर-रूपचन्द्रयोराचार्यपदं दत्तं, लुङ्काशाहस्य वचः पालितम्। नागपुरीयलुङ्काः कथापिता लोके।

अथ सकलपर्षदि समेतायाम्–

"आरम्भे नत्थि दया महिलासंगेण नासए बंभं। संकाए संमत्तं०"

इत्यादिजीवदयापूर्वकं उपदेशो दत्तः। काव्यद्वयम्–

'श्रुत्वोपदेशं बहुभिस्तु भव्यैरारम्भकृत्यं सततं निषिद्धम्।
समाहृतं शीलमहर्घ्यरत्नं सम्यक्त्वमात्तं च निशाशनानाम्॥ ६

आचार्यहीरागर-रूपचन्द्रैः समाहृते श्रीमुनिसिंहधर्मे।
सुलं प्रवृत्तं भवभीः प्रणष्टा जातो हि सर्वत्र गुणप्रकाशः॥ ७

अथ श्रीरूपचन्द्रस्त्रियाऽपि श्रावकव्रतान्यादृतानि। कियत्सु दिनेषु गतेषु श्रीहीरागरजी-रूपचन्द्रजी-पंचायणजीकैर्वनवासः समादृतः, तृतीययामे नगरे गोचर्यै आगच्छन्ति, शुद्धाहारं गृह्णन्ति, षट्कायजीवरक्षां कुर्वन्ति। पुनः पञ्चाचारपालनं कुर्वन्ति, वने कायोत्सर्गं विदधति, ग्रीष्मे आतापनां समादत्ते, शीतकाले शीतपरीषहं सहन्ते, उपशमरसे रक्ताः भव्यजीवान् प्रतिबोधयन्ति। समकाश्चनप्रस्तराः पूजाऽपमानयोः समाः महोज्ज्वलतरैर्गुणैर्विराजमाना अरकेऽस्मिन् परमपुरुषवद् दुष्करक्रियां कुर्वन्तः सुखेन संयममाराधयन्ति। अथ ते त्रयोऽपि देश-नगरादिषु विहरन्ति श्रीजिनधर्ममुद्दीपयन्तः। यत्रैते व्रजन्ति तत्र श्रेष्ठिप्रमुखाः सम्यक्त्वमाद्रियन्ते, केचन श्रावकत्वम्। एवं मालवदेश-बागड-मरुधरोत्तरदेश-मेदपाटदेशादिषु विचरन्तः श्रीजिनधर्मप्रभावनाभिः केभ्यश्चित् संयमं ददानाः बहून् श्रावकीकुर्वन्तः नागपुरीयलुङ्कागच्छस्याचार्या इति बिरुदं दधानाः सन्ति। अथैकदा पञ्चायणजीको मुनिराज्ञा लात्वा कतिचित्साधुपरिवृतो मालवदेशे नगरकोट्टे समेतः। सर्वोऽपि नगरलोको हृष्टः। श्रस्तोकलोकोपरि धर्मोपदेशदानादिना उपकारः कृतः। तत्र तिष्ठतस्तस्य श्रीपञ्चायणजीसाधोः शरीरे असाध्यो रोग उत्पन्नः। तदा अनशनं कृत्वा स्वर्गं प्राप्तः।

अथ सं० १५८५ रयणुंजीकेनाऽऽत्महितं ज्ञात्वा श्रीहीरागरसूरिपार्श्वे दीक्षा कक्षीकृताऽहिपुरे। बहून् दिवसान् पञ्चाचारशुद्धं संयमं प्रतिपाल्यान्तसमये अनशनं कृतम्। तस्मिन् समये श्रीरूपचन्द्रसूरिभिः रिणस्तम्भपुर-कोट्टस्थितै रयणुंजीकेनानशनं गृहीतं श्रुत्वा नागोरपुरे समेत्य स्वपितुराराधनाव्रतानि पूर्णानि कृतानि। पञ्चाशद्दिनानि संस्तारकमाराध्य शुभध्यानेन कालं कृत्वा वैमानिको देवो जातः।

अथ श्रीहीरागर-रूपचन्द्रसूरयोऽनेकसाधुसहिता नागोरपुराद् विहृत्य सं० १५८६ बीकानेरे समायातास्तदा तत्र चौरवेटिकः श्रीचन्द्रनामा लाक्षापोशोऽस्ति। तेन बहुसाधुजनानां सुखेन संयमयात्रानिर्वाहार्थं स्वकीया कोष्ठिका चतुर्मासीस्थित्यै दत्ता। अथ व्याख्यानं श्रोतुं पोषध-प्रतिक्रमणादिकं कर्तुं च सुरवंशीयाश्चौरवेटिका अन्ये बहवः समागच्छन्ति, तस्मिन्नवसरे कमलगच्छीययतयः शिथिलाचारा अभूवन्। ततस्तेभ्यो विरक्ताः सन्त एव गुणरञ्जिताश्च चौरवेटिकाः सर्वे नागोरीलुङ्कागच्छीया जाताः। कोष्ठिकोपाश्रयनिमित्तं दत्ता। अथ चतुर्मास्यनन्तरं विहृत्य क्रमेणोज्जयिनीं पुरीं गताः।

तत्रान्त्यसमयं मत्वा श्रीहीरागरसूरिभिरेकविंशतिदिनमनशनं साधयित्वा मृत्वा वैमानिकसुरत्वं प्रपेदे । पदवी १९-समा भुक्ता ॥ ५९ ॥

अथ श्रीरूपचन्द्रसूरय उज्जयिनीतो विहृत्य क्रमान्महिमनगरे पादा अवधारिताः । तत्र चातुर्मासिकस्थितिकरणाय कोटिधनाधीशगोवर्द्धननामकश्रेष्ठिपार्श्वतः स्थानं मार्गितम् । ततः परीक्षां कर्तुं तथाहास्यपूर्वकं श्रेष्ठी प्राह–'भो महाभागाः ! स्थातुं योग्या वसतिस्तु काचिन्नास्ति परन्त्वस्मदीयकोष्ठिकाऽभिमुखचतुर्द्वारकेऽस्मद्रथचक्राणि पतितानि सन्ति तेषामुपरि स्थीयतां सुखेन ।' तदाऽऽचार्यश्रीरूपचन्द्रैरन्ये तु साधवोऽन्यत्र चतुर्मासे(स्यर्थ) प्रेषिताः । स्वयं देपागरमुनिनाऽन्वितैः रथचक्रोपर्युपविश्य मासोपवासं प्रत्याख्याय धर्मध्यानपरायणैः स्थितम् । श्रेष्ठिना रहो लोका रक्षिताः, परं ते तु महान्त उत्तमपुरुषाः, मेरुवद् धर्मध्यानेऽचलाः स्थितदृष्टयः । श्रेष्ठिपार्श्वे तैर्लोकैः सर्वोऽपि धर्मध्यानादिको व्यतिकरस्तेषां निरूपितः ।

अथ श्रेष्ठी तदीयगुणश्रवणेन जागरूकभव्यपरिणामः सन् प्रातरुत्थायाऽऽगत्य प्रदक्षिणात्रयदानपूर्वकं नत्वा पादयोर्निपत्य कृताञ्जलिः सन्नित्युवाच–'हे स्वामिन् ! असारेऽस्मिन् संसारे भवन्तो धन्याः शुद्धक्रियोद्धारकाः, भयापवारकास्तारकाश्च सन्ति । न दृश्यतेऽस्मिन् समये भवादृशः कश्चित् तपोधनेषु मुख्यः । अहं पापीयानस्मि, येन भवतां कष्टं दत्तम् । महानविनयो वः कृतः । तदिदानीं स्वामिन् ! भवन्तः कृपां कृत्वाऽन्यस्मिन् स्थाने समीचीने तिष्ठन्तु' तदा श्रीश्रीरूपचन्द्राचार्यैरुक्तम्–'हे महानुभाव ! एको मासक्षमणस्तत्रैव करिष्यते । पश्चात् स्पर्शनानुरूपं विधास्यते ।' एवं कुर्वतां मासक्षमणः पूर्णो जातः । पारणार्थं द्वये चलिताः । पारणाय एकैकमुत्कलं गृहं रक्षितमासीत् । तदा श्रीरूपचन्द्राचार्यैस्तु गृहस्थैकगृहमकपाटं वीक्ष्य प्रवेशः कृतस्तत्र गृहस्थेनाऽभाणि–'महाभाग ! अधुना तृतीययामे अन्य आहारस्तु न सांप्रतम् । प्रासुका माषाः पतिताः सन्ति । ते यदीच्छाऽस्ति तदा गृह्यताम् ।' अथ तैरपि शुद्धाहारनिरीक्षणपूर्वं गृहीताः । अथ देपागरसाधुरेकस्य मिथ्यात्विनो गृहस्थस्य गृहमकपाटं विलोक्य प्रविष्टः । तदा तत्रैका स्त्री प्राह–'अधुनाऽशनस्य का वेला ? रक्षान्विता रब्बास्थाली कस्मैचित् कार्याय भृत्वा धृताऽस्ति । यदीच्छाऽस्ति तदेयं गृह्यताम् ।' तदा शुद्धां मत्वा सा गृहीता । अथ द्वयेऽपि स्थाने पारणां विधायाष्टमं गृहीतम् । तस्यैव श्रेष्ठिन आज्ञां लात्वा तस्यामेव कोष्ठिकायां महत्यस्मिंश्चतुःद्वारके स्थिताः ।

अथ श्रेष्ठी बभाण–'हे स्वामिन् ! अद्यप्रभृति मनो-वाक्-कायैर्यूयं मे गुरवोऽहं भवदीयः श्रावकोऽस्मि ।' अथ देशान्तरेषु श्रेष्ठिना निजवणिक्पुत्रानन्यानपि स्त्रीयसंबन्धिप्रमुखान् पर्वाणि दायं दायं निवेदिताः समाचाराः–'यदेते मुनयः सत्याः सत्क्रियापालका धन्यतराश्च, कियद्गुणवर्णना लिख्यते ? । ये केचन तेषां चरणारविन्दयुगलं नमस्यन्ति तेषां जन्म फलेग्रहि । वयं त्वेतेषां श्रावका जाताः स्मः' इतीदृशान् समाचारान् वाचं वाचं बहवो लोकाः श्रावका जातास्तत्रत्या अपि बहवः । तथैव जालोरे कोचरान्वया वेलापत्याः, कालूनिवासिनो भाण्डागारिणः, जेसलमेरौ बोहराभिजनाः, कृष्णगढे व्याघ्रचाराः चोधरी-चोपडाः, भट्टनयरे नाहरगोत्रीया महीपालापत्याः साहपदधारिणः वैद्याः । बापणा-ललवाणी-सूणापत्याः, बरडीया-नाहटाप्रमुखा अनेकज्ञातीया ऊकेशवंशीया अगोत्रकाश्च नागोरीलुङ्कागणीया जाताः । एवमेकलक्षमशीतिसहस्राधिकं गृहाणां प्रतिबोधितम् । पूर्णभद्रदेवोऽपि सांनिध्यकृज्जातः । अथ श्रीरूपचन्द्राचार्याः स्वान्त्यसमयं ज्ञात्वा पञ्चविंशतिदिनानि यावदनशनं विधाय महिमपुरे एव कालं कृत्वा वैमानिकसुरत्वं प्रपेदिरे । सं० १५८० तः २१ वर्षान् यावद् पदं भुक्तम् ॥ ६० ॥

६१. तत्पट्टे श्रीदेपागरसूरयो बभूवुस्ते परीक्षकवंशीयाः कोटडानिगमे पेतसीनामा जनकः, धनवती जननी, नागोरपुरे चारित्रं, पदमपि तत्रैवाप्तम्। संवत् १६१६ चित्रकूटमहादुर्गे कावडियान्वयी भारमल्लो धनी तपागणीयोऽभूत्। तेन श्रीदेपागरसूरीणामभिधानं शुद्धक्रियाधारकत्वं च श्रुतम्। तदादित एव तद्गुणरञ्जितचेतस्कोऽवदत् श्लोकः—

धन्यो देपागरस्वामी प्रदीपो जैनशासने।
एष एव गुरुर्मेऽस्ति धन्योऽहं तन्निदेशकृत्॥ ८

इति भावनया शुद्धात्माऽभूद् भारमल्लः। तस्मिन्नवसरे तत्रत्यो भामानामा नाहटोऽस्ति। तद्गृहे पुण्ययोगाद् दक्षिणावर्त्तः शङ्खः प्रादुरभूत्। तत्सांनिध्याद् गृहेऽष्टादश कोटयो धनस्य प्रकटीभवन्ति। अथ षण्मासीप्रान्ते शङ्खदेवेन भामाकस्य स्वप्ने दर्शनं दत्तं निवेदितं च—'भो भामासाह! त्वं शृणु, तव भार्याया उदरे पुत्रीत्वेन कश्चिज्जीवः समेतोऽस्ति। कावडियाभारमल्लभार्योदरे सुकृती कश्चन जीवः सुतोऽवतीर्णोऽस्ति। ततस्तत्पुण्यप्रेरितो भारमल्लकावडियागारे गमिष्यामि' इत्याकर्ण्य भामाकोऽवदत्—'एवं मा याहि, यथाऽहं करोमि तथा गच्छ' इत्युक्ते तेन 'आम' इति भणितम्। अथाह्नर्मुखे जाते सर्वैः स्वजनसहितः शङ्खस्वनजागरुकीकृतानेकलोकः स्वर्णस्थाले दक्षिणावर्त्तशङ्खं निधायातिमहर्घ्यवस्त्रेणाच्छाद्य भामाको भारमल्लभवनाभिमुखमागतः। तमायान्तमालोक्य सानन्दं सादरं भारमल्लोऽभिमुखं मिलितः, पृष्टं च—'किमागमनप्रयोजनं, प्रोच्यताम्' इत्युदिते भामाकोऽवक्—'वर्येभ्य! सभ्यसंबन्धिन्! मम पुत्री तव च पुत्रो भविष्यति, तयोः संबन्धं कर्तुं श्रीफलस्थाने इममद्भुतमाहात्म्यं शङ्खं ददामि' इति निशम्य समुत्पन्नपरमामोदो बहुदानमानपूर्वकमग्रहीत्। भारमल्लः गृहकोष्ठकान्तः समभ्यर्च्य सम्यक् चन्दनचतुष्किकोपरि संस्थाप्य संस्मृतो देवस्तेनाष्टादशकोटिधनं तत्र प्रकटितम्। अत्र महती कीर्त्तिर्निस्सृता।

एकदा तत्र वनान्तरुच्चैर्भण्डपाधो धर्मध्यानं विदधत् साधुगुणग्रामाभिरामः श्रीदेपागरस्वामी शुद्धतपोधनो भारमल्लेन दृष्टो विधिवद् वन्दितश्च। शुद्धधर्मोपदेशामृतं पीतं श्रवणाभ्याम्। अतिप्रसन्नेन भारमल्लेन विमृष्टमहो! महान् भाग्योदयो मे प्रकटितो यदीदृग्गुणगौरवो दृष्टः। सर्वेऽर्था मे सेत्स्यन्ति। तदा भारमल्लोऽन्ये च बहवः श्रावका जाता नागोरीलुङ्कागणीयाः। अथ भारमल्लस्य भामानामकसुतोऽजनि। महान् महः कृतः। सर्वत्र दानादिनाऽर्थिजनमनोरथाः पूरिताः। अन्येऽपि ताराचन्द्रादयः पुत्रा अभूवन्। तत्र भामासाह-ताराचन्द्रौ विश्रुतौ जातौ। स्वगच्छरागेण बहवो जनाः स्वगणे समानीताः। पुनः श्रीराणाजीतोऽमात्यपदं लात्वा बलिनौ जातौ। ताराचन्द्रेण सादडीनाम नगरं स्थापितम्। सर्वत्र पौषधशालादिकानि स्थानानि कारितानि। स्थाने स्थाने, पुरे पुरे, ग्रामे ग्रामे बहुजनेभ्यो धनं दायं दायं स्वगणीयाः कृताः। श्रीनागोरीलुङ्कागणोऽतिख्यातिमाप। पुनर्भामासाहेन दिगम्बरमतगा नरसिंघपोराः स्वगणे समानीताः। बहु स्वं दत्त्वा १७०० गृहाणि तेषामात्मीयानि कृतानि। भिण्डरकादिपुरेषु तदा च जातं श्रावकगृहाणां चतुरशीतिसहस्राधिकं लक्षमेकम्। पुनः देपागरसूरेर्विजयराज्ये लुदिहानानिगमनिवासी श्रीचन्द्रनामा वणिक्चतुरशीतिकोटिवित्तेश्वरोऽभूत्। तस्य सोदरः सुरीभूतः प्रत्यहं वणिक्पुत्राणां लेखानितस्ततो दत्ते, येन बहुधनोत्पत्तिर्भवति। स चैकदा नायातस्तदा श्रीचन्द्रेण पृष्टम्, 'भ्रातर्! ह्यः कथं नागतः?' तदा सुरेणोक्तम्—'भ्रातर्! ह्यो महाविदेहे प्राचि श्रीसीमन्धरजिनं नन्तुमिन्द्रोऽगात्,

तेन सहाहमपि, गतोऽभुवम्। ; व्याख्यानान्ते शक्रेणोक्तम्–'प्रभो! भरतक्षेत्रेऽपि कश्चित् सत्यः साधुर्वर्तते नवा' इति पृष्टे प्रभुणाऽभाणि–' हरे! अस्मिन् समये देपागरनामा मुनिपोऽस्ति, स चतुर्थारकमुनिसमसंयमभृत्।' इमां प्रवृत्तिमाकर्ण्य श्रीचन्देनोक्तम्, 'स क्व सांप्रतमस्ति?' देवः प्राह–'सन्मानकपुरे तपस्यति' इत्याकर्ण्य हृष्टचेतसा श्रीचन्देन स्वमानुषः प्रेषितस्तत्रत्यश्राद्धानामिति कथापितं च–'भवद्भिर्देपागरस्वामिनं नत्वा मदीयाऽत्रागमनप्रार्थना कार्या। ततस्तैः पुराद् बहिर्देवमण्डपे स्थिता दृष्टाः प्रणताश्च भक्त्या विज्ञप्ताः। तदा श्रीसूरिभिरुक्तम्–' ज्ञास्यते साधुधर्मोऽस्ति।' ततो द्वि-त्रिष्वब्देषु गतेषु श्रीश्रीपूज्या लुद्रिहानावाह्योद्याने निरवद्यप्रदेशे तपस्यन्तः स्थिताः।' तदा प्रागुज्ञापितेनाऽऽरामिकेण वर्द्धापनिका श्रीचन्द्राय दत्ता। सोऽपि सत्वरं नग्नपद एवागत्य ववन्दे, तुष्टाव च–'धन्योऽसि स्वामिन्! भवादृशः संयमी कोऽपि सांप्रतं नास्ति।' तत्र श्रीसूरिभिरुपदेशामृतपानेन तच्छ्वसी तोषिते। तस्मिन्नेवावसरे श्रीचन्दसुतया धर्मकुमरीत्याख्यया त्यक्तश्वशुरादिसंबन्धया ज्ञाततत्त्वया गृहे स्थितयैव श्रावकाचारपालनपरया सर्वागमश्रवणावगतपरमार्थया तत्राऽऽगत्य विधिवद् गुरवोऽभिवन्दिताः। गुरुवचनसुधारससुहितया दीक्षाकरणाय चेतो विशोध्य स्वयमेव तत्साक्षिकं चरणमात्तम्। तिसृभिः धर्मसखीभिः सार्द्धं लोके महान् धर्मप्रकाशोऽजनि यशश्च। अस्मिन् गणे सैव प्रवर्त्तिनी प्रथमाऽभूत्। तयापि द्वादशक्रोशीपरिमण्डलविहारः कृतो नाधिकः। एवं श्रीदेपागरस्वामिना धर्मोद्द्योतं विधायाऽऽचार्यपदं नक्षमित २७ समाः परिभुज्य मेडतानगरेऽनशनं कृत्वा २१ दिनान्ते स्वर्गतिः प्राप्ताः॥ ६१॥

६२. तत्पट्टे श्रीवैरागरस्वामी दिदीपे श्रीमालीज्ञातिः, मल्लराजः पिता, रत्नवती जननी, नागोरपुरे जन्म, चारित्रं पदं च तत्रैव, एकोनविंशति १९ समाः पदवीभोगः। मेडतानगरे ११ दिनान्यनशनं कृत्वा देवत्वं प्राप॥ ६२॥

६३. तत्पट्टं श्रीवस्तुपालोऽलञ्चक्रे। कडवाणीयागोत्रे महाराजः पिता, हर्षानाम्नी माता, नागोरपुरे जन्म, चरणं पदं च नागोरपुरे, वर्षसप्तकं पदवी भुक्ता। सप्तविंशति २७ दिनान्यनशनं कृत्वा मेडतानगरे स्वर्जगाम॥ ६३॥

६४. तदीयपट्टपरिष्कर्त्ता श्रीकल्याणसूरिर्जातः। शिवदासः पिता सुराणागोत्रीयः, कुशलानाम प्रसूः, राजलदेसरनिगमे जन्म, बीकानेरे चारित्रं पदं च नागोरपुरे जातम्। चतुर्विंशतिसमाः भुक्तम्, लवपुर्यां दिनाष्टकमनशनं देवलोकालङ्कारतामियायाय सूरिर्महाप्रतापः, शतं शिष्याणां हस्तदीक्षितानामजनि प्रागरूकमल्पयो गच्छवृद्धिकृत्॥ ६४॥

६५. तत्पट्टे भैरवाचार्यो दिदीपे सूरवंशजः।
तेजसीजी पिता तस्य लक्ष्मीनाम्नी प्रसूरभूत्॥ ९

जन्मचारित्रपट्टश्रीकृत्यं नागोरपूर्वरे।
द्वादशाब्दी तु सूरित्वे दिग्दिनानशनं कृतम्॥ १०

सोजताह्वपुरे प्राप देवत्वं शुद्धसंयमः।
पञ्चषष्टितमः सूरिः क्रियाद् वृद्धिं गणे पराम्॥ ११

यस्य धर्मराज्येऽनेके व्यतिकराः शुभा जाताः। नागोरपुरे गहिलडागोत्रीया हीरानन्दप्रभृतयो निःस्वीभूय मेडतापुरे श्रीगुरुवन्दनाय गताः। निशीथे भैरवविहितसांनिध्यतः श्रीश्रीपूज्यैरेतेषामृद्धि-वृद्धिवचो दत्तम्। तेऽपि तस्य गुरोः कृपया पूर्वोक्तनगरेषु महेभ्या भूताः। तदनु तदपत्यैः दिल्लीश्वरात्जगन्नेष्ठिपदं महाराजपदं च प्राप्तम्। फर्कसेरतो वितीर्णकोटिधनैरिदं तु प्रसिद्धतरमाख्यानम्, ततो न विस्तृत्य लिखितम् ॥ ६५ ॥

६६. तत्पट्टे श्रीनेमिदासश्वरिरभवद् विजयी सूरवंश्यः, रायचन्द्रः पिता, राजना जननी, जन्म-चारित्रे बीकानेरपुरे, पदमहिपुरे गृहीतम्। तत् १७ समा भुक्तम्। दिनसप्तकानशनेन उदयपुरे स्वरिताः ॥ ६६ ॥

६७. तत्पट्टं शोभयामास श्रीआसकरणाचार्यः। सूरवंशीयः जयमल्लः पिता, तारांजीति मातृनाम, मेडतापुरे जन्म, चारित्रं पदं च नागोरपुरे। एकदा श्रीश्रीपूज्या नागोरनगरे स्थिताः सन्ति। तस्मिन्नवसरे भागचन्दनामा सूरवंश्यः स्वपितृ-पितृव्य-भ्रातृ-भ्रातृज-पुत्रादिपरिवृतो व्याख्यानं शृण्वन्नुपाश्रये स्वस्थाने उपविष्टोऽस्ति। तदानीं यशोदाकुक्षिजास्तस्य पञ्चापि पुत्रास्तत्र स्थिताः सन्ति। चत्वारस्तु सुता अग्रजाः स्वोचितस्थाने निषण्णाः। पञ्चमोऽङ्गजः सदारङ्गनामा निजपितृव्याङ्के उपविष्टः। महत्यां श्रीसङ्घपर्षदि व्याख्याने जायमाने बालस्वभावत्वात् सदारङ्गः पितृव्याङ्कादुत्थायोपपट्टं 'वृद्धमुनिसमुपवेशनभूः' इयमिति भणिते—'अहं यतिरेव भूत्वा निषेत्स्यामि अत्र' इत्युक्तं सदारङ्गेण सर्वेषु मौनमाधाय स्थितेषु। श्रीश्रीपूज्यास्ततो विहृत्य मेडतापुरे गतास्तदनु तेन सदारङ्गेण गृहे मातादीनां पुरतो निजसंयमग्रहणाशयः प्रोक्तः, अत्याग्रहेण तदाज्ञामादाय श्रीसूरीणामार्यं च कृतसुमतिसङ्गेन सदारङ्गेणामितमस्तं त्यक्त्वा महामहपूर्वकं दीक्षाऽङ्गीचक्रे। नवमवर्षे तरमधृस्येवाऽध्येतुं लग्नः, वर्षपञ्चक एवानुचानो जातः। ततः पञ्चदशाब्दिकेन षष्ठतपोभिग्रहो गृहीतः, महान् तपस्वी विकृतित्यागी शुद्धाशयो विज्ञश्चेति मत्वाऽऽचार्यैरन्त्यसमये श्रीवर्द्धमाननाम्नोऽन्तेवासिनो गणभृत्पददानावसरे प्रोक्तम्—'भवताऽऽस्मीयपट्टं सदारङ्गाय देयम्' इति। १८ समाः पदं भुक्तम्। दिननवकानशनकरणेन श्रीश्रीपूज्यैर्द्यौःप्राप्ता सं० १७२४ फाल्गुने ॥ ६७ ॥

६८. तदीयपट्टे वर्द्धमानाचार्याः। वैद्यवंश्यः सूरमल्लपिता, जननी लाडमदेजीति, जापासरे जन्म, चारित्रमहिपुरे, पदमपि तत्रैव संवत् १७२५ माघशुक्लपञ्चम्याम्। तदनन्तरं संवत् १७३० वर्षे वैशाखशुक्लदशम्यां श्रीबीकानेरे पादा अवधारिताः श्रीश्रीपूज्यैः। तत्र महान् महः संजातः, श्रीफलैः प्रभावना कृता। श्रीदेवगुर्वाज्ञाचिन्तामणिविभूषितमस्तकैः श्रावकैः महती प्रतिष्ठा व्यधायि। ततोऽनेकक्षेत्रेषु विहृत्य पुनर्बीकानेरे समेत्य स्वान्त्यसमयवेदिभिर्दिनसप्तकानशनमाश्रित्य त्रिदिवोऽलञ्चक्रे वर्षाष्टकपदभोगिभिः श्रीश्रीपूज्यैः ॥ ६८ ॥

६९. श्रीवर्द्धमानाचार्यैर्गुरुदेववचःस्मरद्भिः श्रीसदारङ्गसूरयो निजपट्टे स्थापिताः। तत्र महति महे विधीयमाने श्रावकैरनेकधा मिलिते स्वस्वगणीये श्रीसंघे महान् प्रमोदः सर्वेषां भवन्नस्ति। तस्मिन्नवसरे सुचियायदेवीयात्रागतैर्निजसंपद्भरावगणितधनि[नि]वहैः हिसारकोटनिवासिभिः ब्रह्मेचागोत्रीयैः कुहाडापरपर्यायैः शालिभद्रोत्तमचन्द्रादिभिः सभ्यपरिकरान्वितैः प्रमानागोरनगरे समेतैर्विज्ञातपदवीमहैः सुश्रावकैर्गुरुतरगुरुभक्त्या साधर्मिकवात्सल्यादिसुकृतकृत्यकृतये रजतानां चतुःसहस्री व्ययिता। तत्र तेषां यशो-नामकर्मप्रकृतेरुदयो महानजनि। तत्रत्यैः सूरवंश्यैरपि तैः सह स्वसंबन्धः कृतोऽग्राग्रेतनविस्तरस्तु न दृष्टः। ततः सदारङ्गसूरयः किञ्चित् कालं तत्र

स्थित्वाऽन्यदेशेषु विहरन्तः श्रीमत्पातसाहिना मार्गे मिलितेनाऽभिवन्दिताः स्तुताश्च । सत्प्रत्ययदर्शनेन तत्र वीकानेरस्वामिना श्रीअनोपसिंहमहाराजेनापि निजहृद्गतसुतचिन्तानिवर्त्तनपूर्णविस्मितचेतसाऽभ्यर्चिताः सत्कृताः । कथितं च श्रीश्रीपूज्यपादाः–'भवन्त उत्तमपुरुषाः सर्वविद्याविशारदाः श्रेयांसो वरीयांसोऽखिलजगतः पूज्या अस्माकं विशेषतो गुरवः प्रतीक्ष्याश्च' इत्यादिशिष्टाचारपूर्वकम् । ततोऽनोपसिंहात्मजमहाराजसुजाणसिंहेनाऽपि तथैव मानिताः ।

श्रीश्रीपूज्या लवपुरीं गताः । तत्रापि बहवो लोका रञ्जिताः । संवत् १७६० धर्मक्षेत्रे चतुर्मासी कृता । तत्र पातसाहिमान्याऽमात्यमुहता शीतलदासेन शिविराद् द्वितीयचतुर्मासीकरणविज्ञप्तिलेखः प्रहितः, परं न तत्र स्थिताः । ततो विहृत्य पानीयप्रस्थद्रङ्गेऽग्रेतनैः श्रावकैर्बहुविज्ञप्तिकरणपूर्वकं स्थापिताः । तत्रामात्यशीतलदासेन खानमहाशयद्वाविंशत्या युतेन दर्शनमकारि । जन्तुत्राणोपदेशः सर्वैराकर्णितः, उररीकृतश्च दयाधर्मो बहुलाभः समुपार्जितः । ततो योगिनीपुरे श्राद्धा रञ्जिताः विशदतरसिद्धान्तसदर्थसार्थप्रकाशनेन ।

ततोऽर्गलापुरे पातिसाहिश्यालकस्य सत्प्रत्ययदर्शनपूर्वकं जीवदयोपदेशेन मानसं रञ्जितम् । यावत्स्थितिकालं जीवदया महाखानेन प्रवर्त्तिता सर्वत्र नगरे । ततो विहृत्य संवत् १७६६ पुनर्वीकानेरपुरे पूर्वगोपुरे पादा अवधारिताः । तत्र कतिचिद् दिनानि शुक्रास्तादिमलिनदिवसत्वात् श्रावकैः पटमण्डपे रम्यतरे स्थापिताः । तत्र नगरप्रवेशोत्सववार्त्तायां जायमानायां श्रावकाः संभूय विचारयन्ति स्म, ईदृशः प्रवेशः कार्यते यादृक् केनापि न कृतः कारितो वा पूर्वम् । इतश्च साहविमलदासेन गत्वा राज्यद्वारे भणितम्–'महाराज! भवदीयपूर्वजैर्ये मानिता अर्चिता वन्दितास्तेऽत्र श्रीश्रीपूज्यचरणाः समेताः सन्ति । ततो राजशार्दूलैः सनातनः पन्था ज्ञायते एवास्माकम् । श्रीमद्भदन्तपुङ्गवाः पूर्वगोपुरादेव वादित्रवादनादिकया महत्या विच्छित्या प्रविशन्ति। सांप्रतं केचन यतिपाशाः किञ्चित् काचपिच्च्यं विदधति । ततः का वश्चेतसो वृत्तिस्तदाद्रियताम्' इति भाषिते श्रीमहाराजैरवादि–'एते तु श्रीश्रीपूज्या अस्मदीया एव, :ततस्तान् को रुणद्धि? श्रीश्रीपूज्यानां यादृशः प्रवेशमहामहो भवति, तादृश एव विधीयताम्, किमत्रान्यत्, सर्वाऽपि राज्यर्द्धिरादीयताम् । सति राजशासने को निवारयिता?।' ततो हस्ति-तुरगादि-वाद्य-ध्वज-पटहाऽऽतोद्यादि समादाय राजकीयसचिवः समेतः कथयितुं लग्नः–'श्रीमहाराजेनाऽऽज्ञप्तमस्ति, अन्याऽपि या काचिद् भवतां मर्यादा भवेत् तदनुरूपमपि क्रियताम्।' ततः प्रतोलीत्रयं कारितम्। तत्र चैका सूरवंश्यानाम्, परा चौरवेदिकानाम्, तृतीया समेषां श्रद्धालूनाम् । एवं प्रतोलीत्रयपदमण्डनपटोलिकाप्रभृतिसर्वमहत्कृत्यं कृतम् । स्यावदातोद्योतितपूर्वसूरयो युगप्रधानश्रीसदारङ्गसूरयः सम्मुखाऽऽगतास्तोकलोकसमुत्कीर्त्यमानविशदतरकुन्दकुमुदबान्धवमयूखसमानानेकप्रवेकशम-दम-संयमप्रकारा निजचरणगतिमृदुतापहसितराजहंस-सुरगज-मत्तप्रभा मुनिवृषभाः शनैः शनैः स्थानीये स्थानीये यावताऽनेकयतियुताः प्रविशन्ति तावता खरतर-कमलगणयः संघटन्ते । राटीमन्त्रः प्रारब्धः, पूर्वं परस्परं, पश्चात् पुरलोकाग्रतो भणन्ति–'अस्मदीया एवातोद्यनिवहा अत्र ध्वनन्ति, नेतरेषां' इति । प्राहुः–'एतद् वाद्यादिकं राजकीयं सुतरां यतयः वादयन्तु, परं शङ्खं झल्लरिकां च श्रीचिन्तामणि-श्रीमहावीरयोरेव सप्तविंशति २७ महल्लेषु वादयिष्यन्ति, अन्यस्य न।' नागोरीलुङ्कागणीयान् प्रति परानपि तपागौर्जरादीन् प्राहुः–'भवतां शङ्खं न कुत्रापि वादयितुं दद्मः' तदा श्रीभदन्तपादैरुक्तम्–'अस्मदग्रेऽस्मदीय एव

शङ्खो ध्वनिष्यति। अन्यं वयमपि नेच्छामः।' तदा पुनर्नृपादेशः समेतः–'शीघ्रतया प्रवेशो विधीयताम्, यथा तपो न पराभवति पौरान्।' तदाऽमात्येन शङ्खव्यतिकरो निवेदितो नृपाग्रे–'शङ्खस्त्ववश्यमेव युज्यतेऽत्र।' तस्मिन् समये श्रीलक्ष्मीनारायणप्रसादमादाय नयनाख्यः शङ्खध्मा समेतः। तं वीक्ष्य लालाणीव्यासउदयचन्द्र-मुंधडाचतुर्भुजाभ्यामुक्तम्–'एष शङ्खविवादो यतिभिः क्रियते, ततः कथं निवर्त्तेत। एते वदन्ति १३ महल्लेषु श्रीचिन्तामणिभगवतः शङ्खो वाद्यतेऽन्येषु १४ महावीरदेवस्य, एतयोस्तु शङ्खादिकं श्रीश्रीपूज्या अपि नोरीकुर्वन्ति, अतो श्रीलक्ष्मीनारायणजीकस्य शङ्खो ध्वन्यते, एवं विवादो याति।' अन्यथा नेत्यामृश्योपनृप-मागत्य विज्ञप्तम्–'श्रीमहाराज! अधुना तु प्रवेशोत्सवे श्रीलक्ष्मीनारायणजीकस्य शङ्खः प्रदीयते तदा वरम्, अग्रे श्रीमहाराजानामिच्छा।' तदा श्रीमहाराजेन नयनाह्वः शङ्खध्मा दृष्टः, कथितं च–'भो नयन! त्वं श्रीठाकुरजीकानां सेवकोऽसि, वयं निर्दिशामः श्रीश्रीपूज्यसदारङ्गजीकानां प्रवेशमहे श्रीठाकुरजीकानां शङ्खो ध्वन्यताम्।' ततस्तमादाय स तत्र गतः, महताडम्बरेण प्रवेशमहः कारितः। नालिकेराणां प्रभावना कृता। श्रीफलानां नवशती लग्ना। तदनु येनाडम्बरेण प्रवेशोत्सवो जातस्तेनैवाडम्बरेण सुराणासुन्दरदासवेश्मनि मासक्षमणानशनं गृहीतम्। तत आषाढचतुर्मास्यागमेऽन्ययतिविहितशङ्खविवादं मत्वा पूज्यश्रीस्वामिदासजी-रामसिंहजी-प्रेमराजजी-कुशलचन्दजीनामकैः प्रवरयतिभिः श्रीराजसमीपे गत्वा भणितम्–'भो महाराजाधिराजाः! श्रीश्री-पूज्यैर्वः शुभाशीर्वचांसि दत्तानि सन्ति, पुनः शङ्खविवादनिवर्त्तनोदन्तश्च कथापितः, सोऽधुना विमृश्य क्रियताम्। किञ्च खरतरकमलगणीयश्रावकैः पूर्वं या स्थितिः कृता प्रोक्ता सा पृच्छ्यताम्। केनेयं स्थितिः कृताऽभूत्, तत् कर्गलादिकं चेत् स्यात् तदा दर्श्यताम्।' पुनः पूज्यस्वामिदासैरवादि–'महाराजाधिराज! सं० १६४० यावत् तु कोऽपि विवादो नासीत्, कोऽपि कस्यापि न वर्जनमकरोत्। ततो विश्वविश्वम्भराभारसमुद्धरणादि-वराहकल्पश्रीरायसिंहजीराज्ये कर्मचन्द्रवत्सापत्येन सीमा स्वीययतीनां कृताऽन्येषां शङ्खो झल्लरिका च न वाद्यते। ततः श्रीसुरसिंहजीराज्ये ठाकुरसीनामवैद्येन स्वगणीयशङ्खादिस्थितिः स्थापिताऽधुनाऽऽनय। एष विमृश्य विधेयः।' ततः श्रीमहाराजेन द्वावपि समाकार्य पृष्टौ–'भवदीया स्थितिः केन यद्वा कथं चान्येषां शङ्खवादनं निरस्तम्।' तैर्भणितम्–'महाराज! अस्माकं राज्यद्वारतोऽयमारोपः कृतः, यत् १३ महल्लेषु खरतरगणीयानां श्रीचिन्तामणि-शङ्खः १४ महल्लेषु श्रीमहावीरदेवस्य शङ्खो झल्लरिका च प्रवर्त्तते।' एवमुक्ते श्रीमहाराजेन भणितम्–'य आरोपः कृतोऽस्ति भवतोर्द्वयोस्तत् कर्गलादिकं दर्शनीयम्।' तदा तैरुदितम्–'कर्गलादिकं तु तावन्नास्ति किं दर्शयामः?' श्रीमहाराजेनाऽभाणि–'भवतां राज्यद्वारकर्गलं विना द्वयेपां आरोपः कया रीत्या जातः?।' पुनः श्रीमहाराजेन पृष्टम्–'अन्येषां वर्जितो यः शङ्खः तस्य श्रीमहाराजकृतं लिखन-पठनादिकं भवेत्, तदपि दर्श्यताम्, अन्यथा केन हेतुनाऽमूनन्यगणीयान् वर्जयन्ति यतयः?' तदा तैर्व्याहृतम्–'हे श्रीमहाराज! वैधवत्सापत्यरावश्रीबीकाजीकस्य सार्धे समेता अभूवन्, तेन हेतुना तैर्निजनिजसीमाऽकारि। अग्रे देवपादानां मनसि यद् भवेत् तथा विधेयम्।' तदा श्रीमहाराजैर्भणितम्–'वयं श्रीप्रभुणा यथावन्नीतिप्रवर्त्तनार्थे राजानः कृताः स्मः' तद्रीतेरेव प्रवृत्तिर्भविष्यति।' एवमुक्त्वा मनसि विमृष्टम्। एतेषामपि रीतिः प्रस्थापितैव पूर्वजादे-शाधिकारिविहितत्वात्। अथैतेषां श्रीश्रीपूज्यानां समधिका कर्त्तुमुचितेति परामृश्योक्तम्–'यूयं सप्तविंशतिमहल्लेषु सार्वदिकी स्थितिः क्रियताम्, एतेषां तु अद्यप्रभृत्येव श्रीलक्ष्मीनारायणजीकानां शङ्खः सर्वत्र पुरे वादयिष्यति, एतदीयश्राद्धानामपि हर्षवर्द्धापने श्रीठाकुरजीकानामेव शङ्खो वादयिष्यति। श्रीचिन्तामणि-महावीरयोः

शङ्खस्यानवकाशः । एवं शङ्खं निराकुर्वन् जनः श्रीठाकुरजीकेभ्यो विमुखो भविष्यति पुनः श्रीराज्यद्वारस्यापराधी ।' एवं भणित्वा शङ्ख्मा विसृष्ट इति ।

अथ श्रीश्रीपूज्यैरष्टत्रिंशद्वर्षपर्यन्तं धर्मराज्यं कृतम्, तत्र चतुर्विंशतिशिष्याः जाताः । तन्नामानि यथा– श्रीगोपालजीका अटकमहादुर्गे महान्वस्तपस्विनोऽटकजले जनं क्षुभ्यन्तं पदस्पर्शादपहृतं नदीजलेनापि यच्छासनं मानितम् १। श्रीआनन्दरामजीका वनूडनगरे स्थिता अभूवन् २। भागूजीका तोलीयासरे प्रसिद्धाः ३। महेशजीका मालवदेशे प्रसिद्धाः ४। वपतमलजीका महान्तो मल्ला अजितसिंहनृपमल्लमानमर्दकाः ५। चत्वारो रामसिंहजीका आसन्। एके तु ऊकेशवंश्याः कोचरगोत्रीया उदयसिंहजीकैः समं मिलिताः ६। द्वितीयाश्चहुवाणाभिजना मालवदेशे ७। तृतीयाः खत्रिज्ञातीया मालवे ८। तुर्या रामसिंहजीका भीमजी–अमीचन्द्रजीकानां गुरवः ९। श्रीसुखानन्दजीका वीदासरस्थलेषु कृतानशना दिवं ययुः, ये ते तपस्विनः १०। श्रीउदयसिंहजीका येर्गणभेदः कृतः ११। श्रीजगजीवनदासजीका मूलपदाधिपाः १२। द्वौ शिष्यावादिमौ धर्मचन्द्र-गुणपालाख्यौ सिद्धान्तं पठन्तौ देवोपसर्गजनितमहाकष्टौ सम्यगाराधनामाधाय दिवं गतौ १३–१४। मेमराजजी-रायसिंहजीकौ भैरवमन्त्राराधकौ भ्रमन्तौ निशि चलितौ, विहलिप्तपदौ मूकौ जातौ १६। विधिचन्द्रजीका दीक्षातोऽशीतिदिनेष्वेव स्वर्गताः शूलरोगेण १७। वस्तपालजी-हीराजी-धनाजीकास्तपसा प्रसिद्धाः १८–१९। सेरजलकृतनियमा ग्रीष्मे उपसर्गसहनं कृत्वा सं० १७६५ वर्षे पञ्चत्वमापुः २०। वैद्यवंश्या ज्ञानजीका आगमज्ञा महान्तो मालवदेशे दुष्टडाकिन्या गृहीताः। कृतानेकोपचारा अपि न पटवो जाताः २१। मालवदेशे मारजीकाः प्रसिद्धाः २२। लखजीका आनन्दरामजीसार्थे एव विहृतवन्तः २३। दुर्गदासाह्वास्तु मालवे सार्थाद् भ्रष्टादरिनिपाते न केनापि लक्षिताः २४।

एतेषां मध्यान्नवदेशेषु विद्यमानेषु श्रीश्रीपूज्यै उदयसिंहस्य तपस्विनः शिष्यस्य प्रोक्तम्–' भोः! पदं गृहाण ' इत्युक्ते उदयसिंहजीकैरभाणि–' मम पदेन कोऽर्थः? सर्वगुणसंपन्नाः प्रज्ञाला जीवनदासजीकाः सन्ति, तेभ्यः प्रदीयताम्, अहं तन्निदेशकृद् भविष्यामि' इत्युक्ते पुनरप्याग्रहेणोक्तम्–' पदं गृहाण, पश्चान्न किञ्चित् कर्त्तुमुचितम् । ' तैः पदादानं नोरीकृतम् । तदा श्रीसूरिशार्दूलैरवसरं विज्ञाय श्रीसंघसाक्षिपमन्यगणीयानां च पुरतः श्रीमद्भदन्तपदं श्रीजगज्जीवनदासजीकेभ्यो लिखित्वा प्रदत्तम् । स्वयमाराधनां दिनदशकं यावत् साधयित्वा त्रिदिवं मण्डयामासुः सं० १७७२ एवं पट्टानि ६९ जातानि ॥६९॥

७०. तस्मिन्नब्दे शिक्षापत्राणि नागपुरीयसुराणासहस्समल्लादिभिर्लेखं लेखं यतिभ्यः प्रदत्तानि । श्रीउदयसिंहजीका यतित्रयान्विता बीकानेरे स्थिता आचिसूरयस्तु बहुमुनिपरिवृताः श्रीनागोरपुरे स्थिताः । तत्र पट्टमुहूर्त्तं वर्षद्वयं यावच्छुद्धं नागतम् । ततः समीचीने मुहूर्त्ते श्रीश्रीपूज्याचार्याः जगज्जीवनदासकाः पट्टं भूषयामासुः । चोरवेटिकगोत्रीयः वीरपालजी पितृनाम, जनन्या नाम रतनादेवीति, पडिहारानिगमे जनुश्चारित्रं मेडतापुरे, पदमहिपुरे ।

अथ नागोरनगरे घोडापत्यैः कथञ्चित् किञ्चिन्न्यूनरागैश्चौरवेटिकादियुतैर्भण्डापत्यसुराणागोत्रीयाणां लेखं दत्त्वा कथापितम्, महत्सुदयसिंहेषु स्थितेषु अत्रत्यैः श्राद्धैरेतेऽभिषिक्तास्तन्नामास्माकं इष्टं जातम् ।

अथ बीकानेरे स्थिता अपि उदयसिंहजीकाः पट्टे स्थाप्या इति मुहुर्मुहुः समाचारे प्रवर्त्तमाने श्रीश्रीपूज्यैः कथापितम्–'अद्यापि किमपि गतं नास्ति। अत्राऽऽगत्य पदमादीयताम्, यूयं महान्तः।'. तदोदयसिंहजीकैरभाणि–'मम पदादानेच्छा न हि।' ततस्तत्रत्यैर्भाण्डापत्यादिभिरत्याग्रहेण प्रसह्य पदे स्थापिताः बीकानेरे एव। एवं गणस्फोटे जातेऽपि श्रीमूलपट्टेश्वरसांनिध्याद् बहुयतिततिपरिवृताः श्रीजगज्जीवनदासजीनामधेया वरभागधेयाः सर्वत्र देशे देशे क्षेत्रे क्षेत्रे श्राद्धैरन्यगणीयाः संवेनाऽपि सम्मानिताः पूजिताश्च, नागोरपुराद् विहृत्य भट्टनेरकोट्टे पादा अवधारिताः। तत्र लघीयानपि बाघासाहः प्रभावनां महतीं कृतवान्। ग्रन्थगौरवभयान्नात्र विस्तरतो लिख्यते सर्वसंबन्धः।

ततः सरस्वतीपत्तने हिंसारकोटे बुढलाडानिगमे टोहणा-सुनाम-सन्मानऊ-रोपड-बजवाडा-राहो-जालन्धर-गुजरात-रावलपिण्डीप्रभृतिषु क्षेत्रेषु विहृत्य सम्यग् लवपुर्यां प्रवेशोत्सवे जायमाने मुगलयवनः कश्चिद् युवा तत्रत्यस्थायुकसुतोऽकस्मात् संमूर्च्छितो लोकैर्मृत इति संभावितः। सशोकेषु लोकेषु जातेषु नमस्कृतिजलेन सर्वलब्धिवितानसंस्मारिते पूर्वगणधरैः श्रीश्रीपूज्यपादैः सिक्तः, प्रत्यागतचेतनः सन् परमभक्तो महामहिमानमकरोत् १ ॥ ततो अनेकेषु क्षेत्रेषु विहरद्भिः श्रीश्रीपूज्यचरणैर्ये प्रत्याया दर्शितास्तान् को लिखितुं शक्नोति? न वा चक्षुःमलम्। पुनरटकधुनी पतिता। समर्थनामसाहकस्य बहुपण्यभृता नौस्तारिता। तत्रत्यैर्हिन्दूयवनैः प्रभावनाऽधिका चक्रे २ ॥ ततो निवृत्य समागच्छद्भिः सूरिपादैः रोपडनगरे वृद्धश्राविकाया गलत्कुष्ठमपहृतम् ३ ॥ पुनः सरस्वतीपत्तने त्रिषमदुःकालभीतैर्यवनैर्महम्मदहुसेनस्योक्तम्–'वणिग्जनैरेते यतयो रौरवनिबन्धनं दृष्टप्रभावार्थं रक्षिता अत्र' इत्याकर्ण्य दुर्मतिना तेन लोकानां पुरतः प्रोक्तम्–'एतेनात्रैद् गमिष्यन्ति तदाहं कचग्राहमेनान् निष्कासयिष्यामि' इति वार्त्ता कस्यापि मुखाच्छ्रुत्वा निःप्रतिमपुण्यपण्यशालिभिर्लोकोत्तरातिशयधरैः श्रीश्रीपूज्यैर्भणितम्–'भो यतयः! अतः शीघ्रतया विहर्त्तव्यम्, अतः स्थानाद् द्वि-त्रेष्वहस्सु यदत्र भावि तत् स एव दुर्धीः ईक्षिष्यति' इत्युक्त्वा विहर्तुं लग्नाः। तदा श्राद्धैरुक्तम्–'स्वामिन्! वयमपि भवत्पदयुगमाश्रिताश्चलामः। एवं कथनेन श्रीसूरयस्तत्रैव स्थापिताः।

अथ तृतीये दिवसे श्रोरडयवनैः प्रातरेवागत्य बहिर्निर्गतो महम्मदहुसेनः शिरःश्मश्रुकचग्राहं भुवि निपात्य भृशं कुट्टितः, श्वसन्मुक्तः। ततो ज्ञातवृत्तान्तेन तत्पित्रा हसनपांमहाशयेनातीवनिर्भर्त्सितः–'रेपुत्रपाश! त्वादृशोऽधमो मत्कुले कथं जातः? असत्पूज्यपूज्यानामविनयो वाचाऽपि कृतो दुःखायैव, केवलमस्मत्प्राणास्तुदन्ति ४ ॥ तत एव किमधिकल्पितेन। तत्र हसनपांनवाबेन बहुभक्तिपूर्वकमाराधिताः। तदुक्तम्–

दर्शितप्रत्ययं को हि नाराधयति सत्तमम्।
ध्वस्तध्वान्तं प्रगे दीप्तं रविं को न निषेवते? ॥ १२

इति ५ ॥ ततो भटनेरमार्गेऽतितृषाकुलाः करभवाहकाः सद्गुरुचरणस्मरणपरायणास्तत्क्षणमदृष्टचरममृतोपमं पानीयमपिबन् ६॥ ततः संवत् १७८४ वर्षे श्रीबीकानेरनगरे पादा अवधारिताः। तत्र प्रत्यर्थिद्विपपञ्चाननेन श्रीसुजाणसिंहमहाराजेन विशेषतः सन्मानिताः, दृष्टप्रत्ययैः तत्रत्यैः सर्वैरपि राजकीयपुरुषैः समेत्य स्व-पर पक्षाभिमतजनमनोहारी महान् प्रवेशोत्सवोऽकारि। एका प्रतोली चोरवेटिकैः कृता, अपरा सूरवंशीयानामिति

प्रतोलीद्वयमण्डनं चित्रकृदेव जातम्। श्रीफलैः प्रभावना व्यधायि हर्षावेगात् परवशैरिव श्राद्धैः। सुराणा-सुकनदासजीकानां गृहे क्षमाश्रमणैः विहरणं कृतम्। द्वितीयदिवसे आचार्यप्राणनाथजीकैरागत्य श्रीमहाराज-कृतदण्डवन्नमस्कृतिनिवेदनमकारि तदा श्रीश्रीपूज्यचरणैरपि यानि कानिचिद् वचनानि विहितानि तानि श्रीमन्महाराजकुञ्जरैः प्रतीतानि सांदृष्टिकतया दृष्टानि ७॥

तत्र पुरे श्रीश्रीपूज्यपादैश्चतुर्मासद्वितयी कृता। ततो मालवादिजनपदेषु विहृत्य सिंहाद् धेनुमोचनं, निर्धन-श्राद्धस्य सुतस्य धनवरप्रदानं, देवलीयानगरे कीटिकामत्कोटकभूयस्त्वनिराकरणं, भटेवराशिशुकस्य नगरमुख्यताप्रति-पादनप्रभृतयोऽनेकेऽवदातनिकरा जाताः। पुनर्मन्दसोरनगरेऽतीवनिःस्वताविदितसततसद्भक्तिभावितचेतस्कखञ्जभृत आदलवेगकस्य शुद्धवचोऽमृतपानानन्तरमुक्तम्–'त्वं याहीतः, सकलमालवानामाधिपत्यभृद् भविष्यसि' इत्याकर्ण्यैवोज्ज-यिन्यभिमुखं चलतस्तस्यानेके महाराष्ट्रिकाश्वारोहा मिलिताः। तं प्रति गदितम्–'त्वमस्मत्पुरोगमो भूत्वा ग्राम-पुरादीनि दर्शय, यथाऽस्मन्नवीनराज्यसंस्था समीचीना जायेत।' तदा तेन 'आम' इति भणित्वा तदुक्तं कृतम्। पश्चान्नान्हासाहिवकस्य दाक्षिणात्यानामधिपस्य मिलितः, तेनोज्जयिनी-मन्दसोरेन्दोरनाम्नां बृहत्पुराणामा-धिपत्यं प्रददे। ततः सोऽतिबलवान् प्रतापी यवनोऽपि हिन्दूकवत् परमभक्तो जातः। विकृतित्यागरूपया तपःश्रिया शरीरमपि सखेदं जातम्। वर्षद्वयं तत्र स्थित्वा, ततो यथाकथञ्चिद् बीकानेरपुरे समेताः। तनुशक्तेरभावेन प्रवेशनमहोऽपि न कृतः। चतुर्मासचतुष्कमकारि। ततो विहितानशनैः संवत् १८१६ आश्विनकृष्णसप्तम्याः प्रातर्दिनपञ्चकानन्तरं स्वर्गो मण्डितः ४४ समाः पदभोगः॥ ७०॥

७१. तत्पट्टे श्रीभोजराजसूरयो वोहित्थान्वयाः, जीवराजः पिता, कुशलांजी जननी, रहासरे जन्म, फतेपुरे चारित्रम्, पदं तु श्रीनागोरपुरे संवत् १८१६ फाल्गुनमासे। मालवानीति पञ्चाशद्यतिपरिवृताश्चिरं विहृत्य मेडतापुरे दिनत्रिकानशनमाप्तस्वर्गा अभूवन्। वर्षषट्कं पदभुक्तिः। एषां सप्तगुरुभ्रातरोऽभवन्। श्रीलालजी १– जयसिंहजी २– जयराजजी ३– श्रीभोजराजजी ४– श्रीलद्धराजजी ५– श्रीदूदाजी ६– श्रीरामचन्द्रजी ७– क्षेमचन्द्रजी८ नामधेया अष्टौ शिष्याः श्रीमज्जगज्जीवनदाससूरीणां दिग्गजा इव [आसन्]॥ ७१॥

७२. तत्पट्टोदयकारिणः श्रीहर्षचन्द्रसूरयः। नवलपागोत्रे पिता भोपतनजीनामा, माता भक्तादेवीति, करणुग्रामे जनुः, सोझतपुरे चारित्रम्, श्रीनागोरपुरे पदमापुः संवत् १८२३ वैशाखशुक्ल ६ दिने। पदे वर्ष १९ भुक्तम्, श्रीहर्षचन्द्रसूरेर्विजयति धर्मराज्ये महान्तोऽमी यतयः संघाटकधराः तथाहि, अभयराजजी-अमीचन्द्रजी-लद्धराजजी-उदयचन्द्रजी-गुलाबचन्द्रजी-मेघराजजी-हीरानन्दजी-आनन्दरामजीप्रभृतयो मरुधरदेशसमीपवासिनो मालवदेशे मनसा-रामजी-नैणसीजीप्रमुखा ३७। उदीच्यां सेढूजी-जयराजजी-हरजीजी-मंगूजी-हरसहायजी-हरचन्दजीप्रमुखाः ११। एषां वैदुष्यं यादृशं जातं तादृशमत्र युगे न कस्यापि भूतम्। विस्तरस्तु मत्कृतपद्यबन्धपट्टावलीतो ज्ञेयः। सपाद-जयपुरे विहितानशना दिनत्रयं दिवं भूषयामासुः॥ ७२॥

७३. तत्पट्टे श्रीश्रीपूज्याचार्याः श्रीश्रीलक्ष्मीचन्द्रजीनामानः। कोठारीगोत्रे जीवराजजीनामा पिता, जयरङ्गदेवी जननी, नवहरनिगमे जन्म, चारित्रमहिपुरे, स्वहस्तेन पदमपि तदैव। सं० १८४२ अषाढकृष्ण २ दिने तत्र चतुर्मासद्वयी कृता। व्याख्यान-प्रत्याख्यानादि सम्यग् धर्मकर्म प्रवर्तितम्। श्रीसंघमनोरथाः सफलीकृताः। ततो बेनातटनिगमे श्रीसंघेन महोत्सवेन चतुर्मासी कारिता। ततो जोजावरनगरे पञ्चविंशतियतिसमन्विता वर्षद्वयं

स्थिताः। ततोऽन्यानेकक्षेत्राणि निजचरणन्यासेन पूतानि विहितानि। ततो बीकानेरनगरादिषु प्रभूतशुद्धभाव-भावितान्तःकरणश्रद्धालूनां मनांसि प्रमोदमेदुराणि विधाय श्रीसुनाम-पटयाला-ऽम्बाला-धर्मक्षेत्र-रोपड-हुसयारपुरा-जेजों-जगदूरूप्य-कृष्णपुरा-पंडेलश्रावकमण्डितयतिप्रमुखानेकच्छेकजनमनस्सु अमन्दानन्दमुत्पादयन्तोऽमृतसरोलवपुरी-शालिकोधदभ्रक्षेत्रेषु विहरन्तः श्रीश्रीपूज्याः पुनः सर्वर्द्धिचारुचूरुनिगमादिषु चतुर्मास्यनेकशो विधाय हितकृद्धर्मप्ररूपणा दिल्ली-लक्ष्मणपुरी-काशी-पाटलीपुत्र-मक्षुदाबादादिस्थानेषु संस्थित्य च पुनर्दिल्लीनगरे चतुर्मासीद्वयमकार्षुः। ततो भूरिपरिकरान्विताः सुश्रावकप्रभृतीकृतशिविकोच्चमारूढा भरतपुरगोदनिगमादिषु विहृत्य कोटानगरादिषु विहृत्य च दाक्षिणात्यमहिता मालवादि-जनपदेषु च बहुशो शेषश्रीसंयमनोविनोदाय संस्थितास्ततः श्रीनागोर-नगरमधिष्ठाय (?) जालोर-जेसलमेरु-श्रीसंघेन बहुविज्ञप्तिपत्राणि संप्रेष्याऽऽहूताः श्रीमद्भदन्तपुङ्गवाः सुखेन शुद्धसुकृतोपदेशकादम्बिन्याऽस्तोकलोकहृद्गतरौरवतामपनीतवन्तः। ततो विहृत्य फलवर्द्धिपुरीप्रभृतिक्षेत्रेषु चिरं चतुरचेतश्चमत्कारकारिविहारकरणेन झञ्झुरिग्रामे समेताः। राजाधिराजमहाराजश्रीरत्नसिंहदेवैः प्रशालमवर्ष-मुनिवंशाभरण-श्रीगुरुचरणवनजभजनाऽवाप्तपरमानन्दमहर्पिरचनातिशयप्रीणितचित्तै रजतपष्ठिशुद्धलेखन-प्रेषणपूर्वकं बहु विज्ञप्य श्रीबीकानेरपुरे पुरातनपृथ्वीराजकारितप्रवेशोत्सवानुकारिणा महामहेन प्रवेशिताः, विशेषतो भक्तियुक्तिः कृता कारिता च, एकविंशतियतिमधुपार्चितचरणाः सुखेनाब्दत्रयमस्थुः। इतश्चोदीच्यप्रावृत्क्षेत्रे श्रीसंघेन सुनामस्थपतिरघुपतिं प्रति कथापितम्-'बहुवत्सरवृन्दमतीतं श्रीश्रीपूज्यपाददर्शनामृतसतृष्णमस्मदीय-मानसं संवर्वर्त्ति, तेनाशु विज्ञप्तिपत्राणि संप्रेष्य श्रीसूरयः समाकार्याः।' तदा तेनापि बहुशच्छदा विसृष्टाः संदेशहराश्च। अस्मिन्नवसरे स्थैर्यौदार्यगाम्भीर्यादिगुणावलीसमुपार्जितहीराट्टहासराकासङ्काशकरनिकरसोदरयशःस्तोमैः श्रीश्रीपूज्यचरणैः सद्यः प्रसद्य समागमदलद्वारा ज्ञापितमागमनम्। ततो बीकानेरान्महतो महेन विहृत्य नवहरनिगमं पुनाने राजपुरारोढीबुढलाडादिषु समागत्य सुनामनगरे चतुर्मासी कृता। तत्र लद्धराजजीकानां प्रपौत्रशिष्यो रघु-नाथर्षिः शिष्यचतुष्टययुतः, अपरेऽपि त्रिंशतिसाधवस्तैः परिवृताः श्रीमद्भदन्तपुङ्गवाः सदागमावलीं सम्यग् व्याख्यान-वन्तः। ततो विहृत्य सन्मानन-धर्मक्षेत्र-सढौराम्बला-बनूड-रोपड-नालागढ-लुदिहाणाप्रमुखक्षेत्राणि स्पर्शनापूतानि विधाय च संवत् १८९० वर्षे श्रीमत्पटयालानामनि पुटभेदने श्रावकैश्चतुर्मासी कारिताऽस्ति। तत्र सुखेन धर्मकर्म प्रवर्त्तयन्तः विराजन्ते ते, सर्वजनपदेषु पूर्ववद् विजयमानाश्चिरं जीयासुः कोटिदीपालिकाः। एतदाज्ञया श्रीसंघः प्रवर्त्तताम्।

पट्टावल्या प्रबन्धोऽयं रघुनाथर्षिणा कृतम्।
लिखितः सुगमः शोध्यो विशेषज्ञैः पुनर्मुदा॥ १९

इति श्रीमद्विबुधचक्रशक्रश्रीमुनिराजसिंहचरणाब्जचञ्चरीकरघुनाथर्षिणा
पट्टावलीप्रबन्धो रचितः॥
सं० १९८९ असाढ सुदि २ श्री॥



# अञ्चलगच्छ-अपरनाम विधिपक्षगच्छ-पट्टावली।

( विस्तृतवर्णनरूपा )



१. श्रीमहावीरपाटें श्रीगौतमस्वामी थया।——————तेहनें पुंठइं कोई शिष्य नहीं, तिवारें गुरुभाई श्रीसुधर्मास्वामिनें पाट आपीउ। वर्ष १०० आयु भोगव्यो, ते प्रथम पाट जाणवो।

२. बीजे पाटें जंबुस्वामी जाणवा। ते मोक्ष गया तिवारें केवलज्ञान आदे दश बोल विच्छेद गया, ते कहे छे—मनःपर्यवज्ञान १, परमावधिज्ञान २, पुलाकनामालब्धि ३, आहारकलब्धि ४, क्षायिक समकित ५, उपशान्तमोह-इग्यारमु गुणठाणुं ६, जिनकल्पिविहार ७, परिहारविशुद्धिचारित्र-सूक्ष्मसंपरायचारित्र-यथाख्यातचारित्र ८, केवलज्ञान ९, मोक्षमार्ग १०। ए बीजो पाट।

३. त्रीजे पाटे प्रभवस्वामी थया।

४. चउथे पाटे सिज्जंभवसूरि थया।

५. पांचमे पाटे यशोभद्रसूरि थया।

६. छठें पाटें संभूतिविजय थया।

७. सातमे पाटे श्रीभद्रबाहु थया।

८. आठमे पाटे श्रीथुलभद्रस्वामी थया।

९. नवमे पाटे श्रीमहागिरिसूरि थया।

१०. दशमें पाटे श्रीसुहस्थितसूरि थया।

११. इग्यारमें पाटे श्रीइन्द्रदिन्नसूरि थया। कोटिगण। वली बीजुं बीरुद। कोटिवार सूरिमन्त्रनो जाप कीधो तेणे 'कोटिकगण' कहेवाणो। ए इग्यारमो पाट जाणवो।

१२. बारमे पाटे श्रीदिनसूरि थया।

१३. तेरमे पाटे श्रीसिंहगिरि थया।

१४. चउदमे पाटे श्रीवज्रसूरि थया; 'वयरीशाखा' थइ।

१५. पंदरमे पाटे श्रीवयरसेण थया।

१६. सोलमे पाटे श्रीचन्द्रसूरि थया, चंद्र समान तेहथी 'चन्द्रकुल' थयुं।

१७. सत्तरमे पाटे श्रीसामंतभद्रसूरि थया।

१८. अढारमे पाटे श्रीवृद्धसूरि थया।

१९. ओगणीसमे पाटे श्रीप्रद्योतनसूरि थया।

२०. वीसमे पाटे श्रीमानदेवसूरि थया।

२१. एकवीसमे पाटे श्रीमानतुंगसूरि थया। 'नमिऊण' जोडी शासननी उन्नति वधारी।

२२. बावीसमे पाटे वीरसूरि थया।

२३. त्रेवीसमे पाटे श्रीजयदेवसूरि थया।

२४. चउवीसमे पाटे श्रीदेवाणदसूरि थया।

२५. पचवीसमे पाटे श्रीविक्रमसूरि थया।

२६. छवीसमे पाटे श्रीनरसिंहसूरि थया।

२७. सत्यावीसमे पाटे श्रीसमुद्रसूरि थया।

२८. अठावीसमे पाटे श्रीमानदेवसूरि थया।

२९. ओगणत्रीसमें पाटे श्रीहरिभद्रसूरि थया।

३०. त्रीसमे पाटे श्रीविबुधप्रभसूरि थया।

३१. एकत्रीसमे पाटे श्रीजयानन्दसूरि थया।

३२. बत्रीसमे पाटे श्रीवीरभद्रसूरि थया।

३३. तेत्रीसमे पाटे श्रीयशोदेवसूरि थया।

३४. चोत्रीसमे पाटे श्रीविमलचन्द्रसूरि थया।

३५. पात्रीसमे पाटे श्रीउद्द्योतनसूरि थया।

३६. छत्रीसमे पाटे श्रीसर्वदेवसूरि थया। तेणे वडतले सूरिपद आपोउ। 'वडगच्छ' थोउं नाम।

३७. साडत्रीसमे पाटे पद्मदेवसूरि थया।

३८. आडत्रीसमे पाटे श्रीउदयप्रभसूरि थया।

३९. ओगणचालिसमे पाटे श्रीप्रभाणदसूरि थया, जेहने संघे प्रतिष्टाइ नाणां घणा खरच्या, 'नाणावालगच्छ' पाचमुं नाम थयु।

४०. चालिसमे पाटे श्रीधर्मचन्द्रसूरि थया।

४१. एकतालिसमे पाटे श्रीसुमणचन्द्रसूरि थया।

४२. बेतालिसमे पाटे श्रीगुणचन्द्रसूरि थया।

४३. त्रेतालिसमे पाटे श्रीविजयप्रभसूरि थया।

४४. चम्मालिसमे पाटे श्रीनरसिंहसूरि थया।

४५. पसतालिसमे पाटे श्रीवीरचन्द्रसूरि थया।

४६. छइंतालीसमे पाटे श्रीमुनितिलकसूरि थया।

४७. सडतालिसमे पाटे श्रीजयसिंहसूरि थया।

४८. अडतालिसमें पाटे श्रीआर्यरक्षितसूरि थया।

हवइं अंचलगच्छनी उत्पत्ति कहीइं छे; जिसिं कलिकालें तेणें योगिं करी जैनदर्शनमांहिं मायो बाहुल्यइं क्रिया टली, आपणी स्वेच्छाइं नवनवी वात आदरी तिसिं अवसरिं श्रीजयसिंहसूरि दंताणिग्रामें आव्या, तिहां द्रोण व्यवहारीओ रहै छइं तेहनें गोदओ एहवें नामें पुत्र छे। इग्यारछत्रीसें (सं० ११३६) जन्म, संवत् ११४२ इग्यारबेतालें दीक्षा लीधी। ते सकल शास्त्र भणतां थकां 'दसवैकालिक' सिद्धान्त भणवा लागा, तेहमांहे एक गाथा दीठी, यतः–'सिउदगं न सेविज्जा सिलावुट्ठो हिमाणिय।'

ते शिष्य गाथानो अर्थ विचारवा जोवा लागो, सीतोदक सचित्त पाणी न सेवीइं शिलावृष्टि ते हेमनां पाणी वंधनसें। उष्नोदक तातो पाणी, माहात्मा जे साधु तेणे लेवुं। गुरुकनें आवो प्रश्न पूछिओ– 'भगवन्! 'अन्नहावाई अन्नहाकिरिया' कहीइं अनेरु कहीइं।' गुरु आगलि गाथा भणी, तिवारें गुरुइं वात कही–'वच्छ! ए क्रिया हवणां न चाले।' तिवारें तेणें शिष्यें कहीउं–'जे चलावे प्रतिलाभ अथवा नहीं?।' गुरुइं कहिउ–'ते भाग्यवंत।' तदनंतर तेणें शिष्ये समग्र सिद्धान्त वांची क्रिया समग्र ओलखी साची, गुरुइं तेहनइं उपाध्यायपद दीधुं, विजयचन्द्र नाम दीधुं, तेणे च्यार यति सहित विहार कीधो। लोकनें साचो धर्मनो उपदेश दीधां, पणि ते कोई अंगीकार करे नहिं, ते क्रिया न चाले। पछैं पावें पर्वतइं आवी भगवंतने वांदी त्रीस उपवासनु पचक्खाण कर्युं। हवै तेणें समयें श्रीमहाविदेह क्षेत्रनें विषे श्रीसीमंधरस्वामिं पासें वखाणें वखाण सांभलवा श्रीचक्रेश्वरी गयां हता, तिहां श्री[सी]मंधरस्वामिइं श्रीविजयचन्द्र उपाध्यायनी क्रिया गुणनी प्रसंसा कीधी, पूर्वक वंदना करी, आगल हाथ जोडी उभी रही, ने गुरुनैं कहै–'वालागी प्रभु तुम्हे 'विधिपक्ष' नामा गच्छ थापो। लोकमति सुधर्म तणो मार्ग प्रगट करी आपो।' एहवुं वचन देवीतणुं हीइं धरी, पावापर्वतइंथी हेठा उतरी देवीइं कह्युं हतुं जे भालजनगरे जाजो, तिहां शुद्धमांन आहार मिलसै। तिहां पारणुं करजो, ते वचनें भालजनगरे आव्यां, तिहां शुद्धमांन आहार वुहरि पारणुं करीउं तिहां यशोधन भणसालीने प्रतिबोध्यो। पछे तेहनें नवीन प्रासादें भरतेश्वर चक्रवर्त्तितणी युक्ति प्रतिष्ठा थातैं थकिं आकासि देववाणी एहवी थई–'अहो लोको विधिपक्षगच्छ आसरो, जिम संसार तरो।' एहवुं देवीवचन सांभलि श्रावक [illegible]सो धर्म आदर्युं। राजा विक्रमादित्य थकी इगारसै ओगणोतेरइं (सं० ११६९) वरसइं श्रीविधिपक्ष गच्छनो महिमा विस्तर्यों। हवें विहार करतां श्रीविजयचन्द्र उपाध्याय वडणपनगरें पहोता। तिहां कोडि व्यवहारीयो छै, ते सिद्धराओ जेसंगनो भंडारी छे, तेहने प्रतिबोध्यो। यतः–

तस्स सुआ समयसिरि एककोटिटंका मूलअलगारा।
परिहरीय गहिय दिक्खा पणवीससहि य परिवरिया॥ १

अण्णेवि तत्थ जणया गुरुवयणरसेण लीण पडिबुद्धा।
के सव्व[देस]विरई वेरागवसेण य पडिवण्णा ॥ २

अर्थ–ते कोडि व्यवहारीयानी पुत्री समयश्री छे, तेणें कोडिसोनाना मुल्य वेसइ तेटलानुं ग्रहणुं पहिरइ छँ ते सर्व तजीनें पचवीस सखी साथे परवरी थकी गुरु पासे दीक्षा लीधी। १। वली बीजा पणि घणा मनुष्य गुरुना वचनरस तेणे लयलीन थका केटलाइक सर्वविरति साध थया, केटलाइक देशविरति श्रावक थया। वयराग वसें पडिवजुं। ते कोडि व्यवहारीओ पडिक्रमणें छेडें करी वांदणा देवा मांड्या। तिवारे कुमारपालराजाना पुछयाथी हेमाचार्ये प्रभाविकपुरुषें कहिउं–'ए अविचलक।' तिवारें पूर्वे तो 'विधिपक्ष' एहवुं नाम हतुं, वली बीजुं नाम 'अंचलगच्छ' स्थापना थई। हवें श्रीविजयचन्द्र उपाध्याय थीराद्रे पहोता तेहवा समयनें विषें सोपारापूर पाटणइं कोटि द्रव्यतणो धणी वाहड, नेंडी कलत्र, तेहनो पुत्र जेसिंगकुमार जंबुस्वामिनुं चरित्र सांभलि मावित्रनी आज्ञा मागी थिराद्रनगरे पुहतो। गुरु श्रीविजयचन्द्र उपाध्याय चैत्यपरिवाडे गया छँ। पछवाडे ठवणी उपरि पुस्तक देखी एक वांच्युं। सातसें गाथा 'दशवैकालिक' आवडिउं। पछें जेसींगकुंमरनें दीक्षा दीधी। त्रिहु वरसें त्रिण कोडि ग्रंथ भण्या। हवे विजयचंद्र उपाध्यायनें घणां साधु साध्वीना परीवारसुं परवर्यां। पृथवी पीठने विषे विहार करता मंदाउर नगरिं पोहता, तिहां आचार्यपद स्थापना थई। विजयचन्द्र उपाध्यायनुं नाम श्रीआर्यरक्षित एहवुं नामस्थापना थई। हवें श्रीआर्यरक्षितसूरि भूपीठनें विषें घणा साधु साधवीनें परिवारें विहार करता एकवीससइं साधुनें दीक्षा दीधी। इग्यारसइं त्रीस साधवीनें दीक्षा दीधी। शाखाचार्य १२, उपाध्याय २०, वाचक ७०, पंडित १०३, समयसिरी प्रमुख महत्तरा पुहतणीस ८२। एवं से . . . अठ्यासीपद स्थापना कीधी। बैणपनगरे संवत् १२३६ बार छत्रीसें श्रीआर्यरक्षितसूरिनें निर्वाण। एवंकारइं सर्वायु वर्ष १०० ए अडतालिसमो पाट जाणवो ॥

४९. हवें ओगणपचासमें पाटें श्रीजयसिंघसूरी थया। यतः–

महयाडंबरयुतं सूरी पयंतस्स विओणवे जायं।
जयसिंहसूरिनामेण जाओ भूमीसिंगारो ॥ ३

अर्थः–मोटे आडंबरइं करी सहित तेह जयसिंहसूरिनें वइंणपनगरनें विषइं सूरिपद आचार्यपद थयुं, एहवा जयसिंहसूरि पृथवीने विषें श्रृंगारसरखा थया। हवे तेह समयनें विषें सिद्धराओ जेसंगने पाटें राजा कुमारपाल थयो। जेणे हेमाचार्यनें वचनें अढारदेशनें विषइं जीवदया पलावी। जय[सिंह]सूरि कुमारपाल राजा आगल पाखी पुंनिम अमावास्यानी प्ररूपणा साची छँ, एहवुं कहेवराव्युं। वली दुर्मत जयसिंहसूरीनें मारवा आव्या, ते थंभाणा। वली पेटपीड थइ, पछी गुरुनें वीनती कीधी। चीठ्ठटक वारो कर्यो। पेटपीड मटी। एहवा श्रीजयसिंहसूरि विहार करता महावपुरिं पहोता। संवत् इग्यारओगणोतेरिइं जन्म, संवत् इग्यारसताणुंइ दीक्षा लीधी, संवत बार छत्रीसें आचार्यपद, संवत् बार अठ्ठावनइं नीर्वाण ॥

५०. पंचासमें पाटें श्रीधर्मघोषसूरिनी कथा–माहावपुरनें विषे महावपुरिइं नगरिं श्रीचन्द्र व्यवहारीओ, राजलदे कलत्र, तेहनो पुत्र धनदत्तकुमर। संवत् बार अठ्ठोत्तरे जन्म, संवत् बार सोलोतरे मावित्रमि

दीक्षा लीधी, जेणें समेंभरदेसनो धणी नीद्र गहिलडओ महा अहेडानो व्यसनी ते राजान प्रतिबोधी
श्रीपार्श्वनाथनी प्रतिमा पूजतो कीधो। संवत् बार चओत्रीसें भट्टोहरिग्रामिं सूरिपद थयुं। संवत् बार अडसट्ठि नीर्वाण।
एवं सर्वायु वर्ष ओगणसाठ॥

५१. हवे एकावनमे पाटे महिंद्रसींह सूरि थया। सरस नामें नगर। देवप्रसाद एहवे नामें श्रेष्ठि
वसें, थिरादेवी कलत्रं। संवत् बार एकोत्तरें गच्छनायकपद। जेणे वेगलावी श्रावक वांदता आव्यां,
तेहना मनना चोरासी संदेह घडी एकमाहि भागा। संवत् तेर नवोतरें वइंरवाडि। निर्वाणी तिमिरपुरें।
एवंकारे वर्ष ··· ॥

५२. तेहनें पाट श्रीसिंहप्रभुसूरि। बीजापूरनगरी अरसिंह श्रेष्ठी, प्रीतमती भार्या, तेहनो पुत्र।
सं० १२८३ जन्म, सं० १२९१ दीक्षा, जेणें चेले हुतें गुरस्युं वाद कराव्या, बुद्धि करी वादि हराव्या।
सं० १३०९ आचार्यपद, गच्छनायकपद। सं० १३१३ तिमिरपुरें निर्वाण। एवंकारे ३० वर्ष आयु सर्व आयु
भोगवीउं॥

५३. त्रइंपनमें पाटें अजितसिंहसूरि। डोडग्रामिं जिणदेव श्रेष्ठि, जिनमति कलत्र, तेहनो पुत्र। संवत्
बार व्यासीइं जन्म, संवत् बार एकाणुइं दीक्षा, संवत् तेर चउदोत्तरे अणहलपुरिपाटणीं आचार्यपद, जेणें
सुवर्णगिरितणो स्वामि राओल नरसिंघ प्रतिबोध्यो। देशमाहि वध वातो वार्यो। लोकन कुमारपालतणा वारा
संभार्या। पंदर पद वैसणां तणां महोच्छवइके लग्नमांहि नीपजाव्यां। संवत् तेर सोलोतरे जालोरनगरे
गच्छनायकपद। तेर ओगणचालें निर्वाण। एवंकारे छपन वर्ष सर्वायु॥

५४. चोपनमै पाटै देविंद्रसिंघसूरि पालहणपुरनगरिं श्रीमालवंसइं सांतु श्रेष्ठि, संतोपश्री कलत्र, तेहतणो
पुत्र। संवत् बार नवाणुंइ जन्म, सवत् तेर छेडोत्तरइ थिराद्रे दीक्षा, संवत् तेर त्रेत्रीस तिमिरपुरे आचार्यपद,
संवत् तेर ओगणच्यालें गच्छनायकपद, तेहनी वाणी साभलवा निमित्त अनेक गच्छना उपाध्याय, पंडित
आवें। संवत् तेर एकोत्तरे अणहल्लपुरपाटणि निर्वाण। एवंकार वर्ष बिहुत्तरे सर्वायु॥

५५. हवे पंचावनमें पाटें धर्मप्रभसूरी। भीनमालनगरिं श्रेष्टि लीबा, वीरूमदे कलत्र, तेहनो पुत्र।
संवत् तेर एकत्रीसें जन्म, संवत् तेर एकतालइं दीक्षा जालोरि, संवत तेर ओगणसठि आचार्यपद, संवत् तेर
एकोत्तरइं गच्छनायकपद अणहल्लपुरपाटणें थयुं। तेहने वारे भवनतुंगसूरि शाखाचार्य थया। तेह जूनागढ
गया। तिहां राओल खंगारतणी समक्षि तक्षितनाग प्रतक्ष आण्यो, सोल गारुडाना नाद नीग्रही जावजीव
सर्प खेलाववा नियम लेवराव्या। पातसाह वदिती पांचसें भाठी भंजारी सवालाख जाल चलावी। एवडी
मोटी शक्तिना धणी। वली चोरासी ज्ञाति चोरासि गच्छना संघ देखतां श्रीआदिनाथनी प्रतिमा बोलावी।
'श्रीअंचलगच्छ साचो छैं' एहवी साखि पुरावी। एक टंक भातपाणी करवुं, रात्र-दीवस मध्यें सूवुं नहीं।
संवत् तेर त्राणुंइं आसोटिग्रामिं निर्वाण। एवं त्रइसठ वर्ष सर्वायु॥

५६. छपनमें पाटें सिंहतिलकसूरी। दर्शन जाइं दुख दूरि। मरुमंडलि आइचपुरनगरें आसधर श्रेष्ठि,

